

॥ अथ ॥

# श्री गुरुगीता

संपादक :

गच्छाधिपति जैनाचार्य

श्रीमद् विजय राजयशसूरीश्वरजी म.सा.




મુખ્ય પ્રાપ્તિસ્થાન




**બુકશેલ્ફ**

16, સિટી સેન્ટર, સ્વસ્તિક ચાર રસ્તા પાસે,
સી. જી. રોડ, નવરંગપુરા, અમદાવાદ - 380 009
**ફોન નં.** (079) 2656 3707, 2644 1826
**મો.** 90330 89036, 90990 00362
Web: www.gujaratibookshelf.com
E-mail: bookshelfa@gmail.com

---

**નવભારત સાહિત્ય મંદિર**

134, પ્રિન્સેસ સ્ટ્રીટ, મુંબઈ - 400 002

જગતનો કોઈ ધર્મ એવો નથી જે ગુરુ મહારાજની શ્રદ્ધા રાખતો ન હોય. અનાદિ કાળના અજ્ઞાન અંધકારને કોઈ ઉલેચનાર જોઈએ. આમ તો આત્મતત્ત્વને જાગૃત કરવાનું કાર્ય જ ગુરુએ કરવાનું હોય છે... પણ સાથે સાથે પોતપોતાના ધર્મની પ્રણાલિકાઓને પણ કંઈક અંશે સુરક્ષિત રાખવાની હોય છે.

કેટલીકવાર એ સુરક્ષા કે પોતાની પરંપરા ચલાવવામાં એટલા વ્યસ્ત બની જવાય છે કે મૂળભૂત આત્મતત્ત્વની વાત કહેવાની ગુરુઓમાં ગૌણ, ગૌણતર અને ગૌણતમ થઈ જાય છે.

આજ ગ્રંથનાં શ્લોક

दारिद्रयदुःखभयशोक विनाशमन्त्रं वंदे महाभयहरं गुरुराजमन्त्रम् ॥१३८॥

અને અન્યત્ર પણ જણાવાયું છે

गुरवो बहवः सन्ति शिष्यवित्तोपहारकाः ।

गुरवः विरलाः सन्ति शिष्यचित्तोपकारकाः ॥

જ્યાં ધનની લેવડ દેવડ અને ધનની ચર્ચા ચાલ્યા કરે છે ત્યાં એવા ગુરુઓ શિષ્યનું ધન હરી લેનાર છે. પોતે મોક્ષ માર્ગ બતાવવાના લક્ષ્ય કરતાં ધનસંચય કેમ વધે, પોતાના મઠ કે સ્થાનકો કેમ મજબૂત બને એ ધ્યાન રાખનારા હોય છે.

જ્યારે પણ અમને વિહાર કરતા કોઈ પણ અજૈન બંધુઓ મળે છે ત્યારે પહેલા એમનો એ સવાલ હોય છે.- તમે બધા વિહરણ કરો છો એ વાત સાચી પણ તમારો મઠ કાયમી નિવાસ સ્થાન કયો છે ? જ્યારે તેઓ જાણે છે કે જૈન સાધુનું કોઈ કાયમી સ્થાન હોતું નથી અને પૈસા કે સ્ત્રીનો સ્પર્શ કરતા નથી ત્યારે તે જિજ્ઞાસુઓને જૈન સાધુઓ કલિકાલની અજાયબી જેવા લાગે છે. જેઓ અલ્પ કષાયી છે એવા અન્ય ધર્મના ગુરુઓ પણ આવો આદર્શ રાખી યથાશક્ય રીતે અવધૂત અને પરમહંસ બનીને વિચરતા હોય છે... પણ બહુધા ધનનો સંગ્રહ કરવાવાળા ગુરુઓ હોય છે. આ ધન સંગ્રહ અને લોકસંગ્રહ આત્માને મૂળ લક્ષ્યથી ચૂકાવી દે છે પણ જેઓ આ બધાથી મુક્ત છે એવા ગુરુઓનો સર્વત્ર મહિમા છે.

આ ગ્રન્થ સૂત અને ઈશ્વર વચ્ચે તથા મહાદેવશ્રી અને પાર્વતી માતાના સંવાદરૂપ છે. પણ ગુરુતત્ત્વના સંશોધકોને આ ગ્રન્થ ઉપયોગી થઈ જાય તેવો છે.

આ ગ્રન્થની એક નાની ચોપડી મારા હાથમાં અમારા સંશોધન પ્રિય શિષ્ય યશેશયશવિજય મહારાજે મારા હાથમાં મૂકી. એક જ બેઠકે કહો કે એક જ ધારાએ મેં પૂરી કરી ગુરુગીતા વાંચી લીધી. ગુરુતત્ત્વનો મહિમા મગજ પર છવાઈ ગયો. મારા હાથમાં આવેલ થોડું જૂનું પણ સુરક્ષિત પુસ્તક ૧૦૦ વર્ષ પહેલાં હિન્દી ભાષાંતર સહિત પ્રકાશિત થયું છે. ભલે આ વૈદિક ધર્મ આરાધિત પુસ્તક છે પણ ગુરુતત્ત્વના

ગૌરવપૂર્ણ વર્ણનમય હોવાથી એનું પુનઃ પ્રકાશિત કરવાનું આ વીતરાગયશસૂરિને મન થયું.

સાહિત્યવ્યાસંગી ઉપા. વિશ્રુતયશવિજયજી બુકશેલ્ફનાં પુસ્તકોનો સેટ પ્રકાશિત કરી રહ્યા હતા. તેમાં આ ગુરુગીતાને સમાવી લેવામાં આવી છે.

દરેક વાચક સદ્ગુરુની શોધમાં રહે. સદ્ગુરૂ પ્રાપ્ત થયા પછી સદ્ગુરુમાં પરમાત્વતત્ત્વની સ્થાપના કરી સદ્ગુરુને ભગવાનની માફક આરાધી પોતાનો આત્મા સાક્ષાત્ કરી પરમાત્મમય બને એ જ અભિલાષા.

પ્રસ્તાવિકમ્નું લખાણ પૂરા થયા બાદ મુનિ યશેશયશવિજય મહારાજે મને ગુરુગીતાની એક કોપી આપી.

આ પુસ્તક વિ. સં. ૨૦૩૭માં પ્રકાશિત થયેલ જેમાં પૃષ્ઠ ૧૫૮થી પૃ. ૨૯૪ સુધી ગુરુગીતાના શ્લોકોનું ગુજરાતીમાં વિવેચન સહિત ભાષાંતર છે.

આ પુસ્તક પણ ચોથી આવૃત્તિરૂપે પ્રસિદ્ધ થયેલ છે. પુસ્તકના અંતે ઉલ્લેખ છે કે આ ગુરુગીતા સ્કંદ પુરાણના ઉત્તર ખંડમાં ઉમા-મહેશ્વરના સંવાદરૂપ છે એવો ઉલ્લેખ છે.

આ આવૃત્તિમાં બીજા અન્ય શ્લોકો ગુરુનું મહત્ત્વ દર્શાવતા છે. પ્રસ્તુત આવૃત્તિ સ્વામી માધવાનંદજીના શિષ્ય સ્વામી ચિદાનંદજીએ પ્રાકાશિત કરાવેલ છે એવો ઉલ્લેખ છે.

# ।। अथ ।।

# श्री गुरुगीता

## श्लोक

**नौमि श्री माधवानंदं सच्चिदानंद विग्रहम् ।**
**यस्येक्षण प्रसादेन तीर्णोऽ हं भवसागरम् ।।१।।**

अर्थ: सच्चिदानन्दस्वरूप श्री माधवानंद को नमस्कार करता हूं जिनकी कृपा दृष्टि के प्रसाद से संसाररूपी समुद्र से मैं पार हुआ हूं।

**ॐ अस्य श्री गुरुगीतास्तोत्र माला मन्त्रस्य सदाशिव ऋषिः । नाना विधानि छन्दांसि । श्री गुरु देंवता । मम चतुर्विध पुरूषार्थ सिद्ध्यर्थे श्रीगुरु प्रीत्यर्थे जपे विनियोगः ।**

अर्थ : ॐ इस श्री गुरुगीता माला मन्त्र के सदाशिव ऋषि हैं, नाना प्रकार के छन्द हैं, श्री गुरु देवता हैं। मेरे चार प्रकार के पुरुषार्थ की सिद्धि के लिये श्री गुरु की प्रीति के लिए जपने में विनियोग है।

**श्री ऋषय उचुः- हे सूत सर्व पुराणज्ञ सर्व माहात्म्यविदांवर ।**
**गुरु माहात्म्यं विशेषेण श्रोतुकामा हि वयं सदा ।।१।।**

अर्थ : ऋषियों ने कहा, सब माहात्म्य जाननेवालों में श्रेष्ठ, सब पुराणों के जाननेवाले हे सूत ! हम विशेष करके गुरु माहात्म्य को सुनने की सदा इच्छा करते हैं।

**आचार्यवान्हि पुरुषो वेदेत्यादि श्रुतिर्जगौ ।**
**तस्मात्सर्व प्रयत्नेन गुरुमाहात्म्यं वद प्रभो ।।२।।**

अर्थ : श्रुति इस प्रकार कहती है कि आचार्यवान् पुरुष ही परमात्मा को जानता है इसलिए हे प्रभो ! सर्व प्रयत्न से गुरु के माहात्म्य को कहो।

**त्वन्मुखात्तु यथा श्रुत्वा तथा सम्यगुपास्महे ।**
**इत्येवं वचनं तेषां श्रुत्वा सूतो ब्रवीदिदम् ।।३।।**

अर्थ : आपके मुख से हम जिस प्रकार सुनेंगे उसी प्रकार उपासना करेंगे। इस प्रकार उनके वचन सुनकर सूतजी ने यह कहा।

**सूत उवाचः साधु पृष्टं भवद्भिश्च लोकानां हितकारकैः ।**
**भवन्तश्च तथा धन्याः पवित्राः कुलभूषणाः ।।४।।**

अर्थ : सूतजी बोले :- लोकों के हित करने को आपने अच्छा प्रश्न किया। आप धन्य हो, पवित्र हो, कुल के भूषण हो।

**येषां चैव गुरु साक्षात् दैवतं परमं शुभम् ।**
**तेषां गुरुकथा लोके वल्लभा भूयतां सदा ।।५।।**

अर्थ : जिनका गुरु साक्षात् परम शुभ दैवत है, उनको लोक में गुरु की कथा सदा प्रिय हो।

**ते धन्याश्च कृतार्थाश्च सफलं देह धारणम् ।**
**उद्धृतं च कुलं तैस्तु ये गुरुं समुपासते ।।६।।**

अर्थ : जो गुरु की उपासना करते हैं वे धन्य हैं और कृतार्थ हैं। उन्होंने देह धारण करने को सार्थक किया है और कुल का उद्धार किया है।

**यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ ।**
**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ।।७।।**

अर्थ : जिनकी परमात्मा देव में पराभक्ति है और जिस प्रकार परमात्मा में भक्ति है उसी प्रकार गुरु में भी भक्ति है, उन महात्माओं को कहे हुए अर्थ प्रकाशित होते हैं।

**कैलाश शिखरे रम्ये भक्ति साधन हेतवे ।**
**प्रणम्य पार्वती भक्त्या शंकरं परिपृच्छति ।।८।।**

अर्थ : कैलाश के रमणीक शिखर पर भक्ति के साधन के लिए पार्वती शंकर जी को भक्तिपूर्वक प्रणाम करके पूछती हैं।

**पार्वत्युवाच : ॐ नमो देव देवेश परात्पर जगद्गुरो ।**
**सदाशिव महादेव गुरुदीक्षां प्रदेहि मे ॥९॥**

अर्थ : पार्वती ने कहा, हे देव ! देवों के ईश्वर ! पर से पर ! जगत् के गुरु ! सदाशिव ! महादेव ! आप मुझे गुरुदीक्षा दीजिए।

**केन मार्गेण भोः स्वामिन् देही ब्रह्ममयो भवेत् ।**
**तत्कृपां कुरु मे देव नमामि चरणं तव ॥१०॥**

अर्थ : हे जगत् के स्वामी ! कौन से मार्ग से जीव ब्रह्ममय हो जाता है ? हे देव ! कृपा करके वह मार्ग मुझसे कहो, मैं आपके चरणों को नमस्कार करती हूं।

**श्री ईश्वर उवाच- मम रूपासि देवि त्वं त्वद्भक्त्यर्थं वदाम्यहम् ।**
**लोकोपकारकः प्रश्नो न केनापि कृतः पुरा ॥११॥**

अर्थ : श्री ईश्वर ने कहा, हे देवी ! तू मेरा ही रूप है, तेरी भक्ति के कारण मैं कहता हूं। यह लोकों का उपकार करनेवाला प्रश्न पहेले किसी ने भी नहीं किया।

**गु शब्दस्त्वन्धकारोस्ति रु शब्दस्तन्निरोधकः ।**
**अंधकार निरोधित्वाद्गुरुरित्यभिधीयते ॥१२॥**

अर्थ : गु शब्द अन्धकार रूप है, रू शब्द अन्धकार को दूर करनेवाला है। अन्धकार का विरोधी होने से ज्ञानदाता गुरु कहलाता है।

**यदंध्रिकमल द्वन्द्वं द्वन्द्व ताप निवारकम् ।**
**तारकं भव सिंधोश्च श्रीगुरुं प्रणमाम्यहम् ।।१३।।**

अर्थ : जिनके दोनों चरण कमल द्वन्द्वरूपी ताप को निवारण करनेवाले हैं और संसाररूपी समुद्र से पार करनेवाले हैं; उन श्री गुरु को मैं प्रणाम करता हूं।

**लोकोपकारकः प्रश्नो न केनाऽपि कृतः पुरा ।**
**दुर्लभस्त्रिषुलोकेषु तच्छृणुष्व यथा तथा ।।१४।।**

अर्थ : लोकों का उपकार करनेवाला प्रश्न पहले किसी ने भी नहीं किया जो तीनों लोकों में दुर्लभ है, उनको जैसा है वैसा सुनो।

**किञ्चिद्गुरुं विना नान्यत्सत्यं सत्यं वरानने ।**
**मन्त्र यन्त्रादि विद्यानां स्मृतिरुच्चाटनादिकम् ।।१५।।**

अर्थ : हे सुन्दर मुखवालों ! गुरु के सिवाय अन्य कुछ नहीं है, यह सत्य है, सत्य है। मंत्र, यंत्रादिक विद्या, स्मृति, उच्चाटन आदिक।

**शैव शक्त्यागमादीनि सन्ति बहुमतानि च ।**
**अपभ्रंशेत्समस्तानां जीवानां भ्रांत चेतसाम् ।।१६।।**

अर्थ : शैव, शाक्त्य, आगम आदि बहुत से मत हैं। वे भ्रान्त चित्तवाले सब जीवों को भ्रम में डालनेवाले हैं।

**वेदशास्त्रपुराणानि कृत्वा वै गुरुकाम्यया ।**
**स्वयं लोके गुरुः साक्षाज्जायते चैव तत्त्ववित् ।।१७।।**

अर्थ : वेद, शास्त्र, पुराण गुरु की कामना से ही किये हैं। तत्त्व का जाननेवाला लोक में स्वयं साक्षात् गुरु ही हो जाता है।

**यज्ञो दानं तपस्तीर्थं व्रतं धर्मपरं च यत् ।**
**गुरु तत्त्वमविज्ञाय मूढ़ास्तेऽन्यपरा जनाः ।।१८।।**

अर्थ : मूढ़ लोग गुरु तत्त्व को न जानकर यज्ञ, दान, तप, तीर्थ, व्रत और अन्य धर्मों में परायण होते हैं।

**गुरुबुद्ध्यात्मनो नान्यत्सत्यं सत्यं वरानने ।**
**स्वलाभार्थें प्रयत्नेन कर्तव्यं च मनीषिभिः ।।१९।।**

अर्थ : हे सुन्दर मुखवाली ! आत्मा से अन्य गुरु को जाननेवाला नहीं है। आत्मा के लाभ के लिए बुद्धिमानों को प्रयत्न करना चाहिए।

**गूढविद्याश्च सर्वेषां देहिनां ज्ञानसंभवः ।**
**उदयः स्वप्रकाशेन गुरुशब्देन कथ्यते ।।२०।।**

अर्थ : सब देहधारियों में गूढ़ विद्या से ही ज्ञान का सम्भव है। स्वप्रकाश से उदय होना गुरु शब्द से कहा जाता है।

**देही ब्रह्म भवेद्यस्मात्तत्कृपार्थं वदाम्यहम् ।**
**सर्वपापविमुक्तात्मा श्रीगुरोःपादसेवनात् ।।२१।।**

अर्थ : जिस कृपा से देही (जीव) ब्रह्म हो जाता है। उसके अर्थ को मैं कहता हूं। सब पापों से मुक्त हुआ आत्मा श्री गुरु के चरणों के सेवन से।

**सर्व तीर्थावगाहस्य प्राप्नोति फलं नरः ।**
**गुरोःपादोदकं पीत्वा जलं शिरसि धारयेत् ।।२२।।**

अर्थ : मनुष्य सब तीर्थों के स्नान का फल प्राप्त करता है। गुरु के चरणोदक को पीकर जल को शिर पर धारण करे।

**शोषणं पापपंकस्य दीपनं ज्ञानतेजसां ।**
**गुरोःपादोदकं सम्यक् संसारार्णवतारकम् ।।२३।।**

अर्थ : गुरु का चरणोदक पापरूपी कीचड़ को सुखानेवाला, ज्ञानरूपी तेज का प्रकाश करनेवाला और सम्यक् प्रकार से संसाररूपी समुद्र से पार करनेवाला है।

**अज्ञानार्तिहरं चैव जन्मकर्मनिवारणम् ।**
**ज्ञान विज्ञान सिध्यर्थं गुरोःपादोदकं पिबेत् ।।२४।।**

अर्थ : अज्ञानरूपी दुःख को हरनेवाले, जन्म-कर्म का निवारण करनेवाले गुरु के चरणोदक को ज्ञान-विज्ञान की सिद्धि के लिए पियें।

**गुरोःपादोदकं पीत्वा गुरोरुच्छिष्टभोजनम् ।**
**गुरुमूर्तेः सदा ध्यानं गुरुस्तोत्रं सदा जपेत् ।।।।**

अर्थ : गुरु के चरणोदक को पीकर, गुरु का बचा हुआ भोजन करें। गुरुमूर्ति का सदा ध्यान करें, गुरु स्तोत्र को सदा जपें।

**काशिक्षेत्रनिवासो सौ जान्हवी चरणोदकम् ।**
**गुरु र्विश्वेश्वरः साक्षात्तारकं ब्रह्म निश्चितम् ।।२६।।**

अर्थ : वह काशीक्षेत्र का निवास है, गंगाजी का चरणोदक हैं। गुरु निश्चित् विश्वेश्वर साक्षात् तारण करनेवाले ब्रह्म हैं।

**शिरः पादांकितं कृत्वा गया सावक्षयो वटः ।**
**तीर्थराज प्रयागो सौ गुरुमूर्ते नमोऽस्तुते ।।२७।।**

अर्थ : वह ही गया है, वह ही अक्षयवट है, वह ही तीर्थराज प्रयाग है, शिर को चरणों से अंकित करके हे गुरुमूर्ति ! आपको नमस्कार है।

**गुरुमूर्ति स्मरेन्नित्यं गुरोर्नाम सदा जपेत् ।**
**गुरोराज्ञा प्रकुर्वीत गुरोरन्यं न भावयेत् ।।२८।।**

अर्थ : गुरुमूर्ति का नित्य स्मरण करें, गुरु का नाम सदा जपें। गुरु की आज्ञा का पालन करें, गुरु के सिवाय अन्य की भावना न करें।

**गुरुवक्त्रेस्थितं ब्रह्म प्राप्यते तत्प्रसादतः ।**
**गुरुमूर्तेः सदा ध्यानं यथा स्वैरिणीयोषिता ।।२९।।**

अर्थ : ब्रह्म गुरु के मुख में स्थित हैं, गुरु के प्रसाद से प्राप्त होता है। जिस प्रकार व्यभिचारिणी स्त्री उपपति का ध्यान करती है उसी प्रकार गुरुमूर्ति का सदा ध्यान करें।

**निजाश्रमं स्वजातिंच स्वकीर्तिं पुष्टिवर्द्धनीम् ।**
**विना सर्वमपि त्याज्यं गुरोरन्यं न भावयेत् ।।३०।।**

अर्थ : अपना आश्रम, अपनी जाति और पुष्टि को बढ़ानेवाली अपनी कीर्ति के सिवाय सब ही त्याज्य है। गुरु के सिवाय अन्य की भावना न करें।

**अनन्यश्चिंतयन्तो मां सुलभं परमंपदम् ।**
**तस्मात्सर्वप्रयत्नेन गुरोराराधनंकुरु ।।३१।।**

अर्थ : मेरा अनन्य चिन्तन करने से परमपद सुलभ होता है। इसलिए सर्व प्रयत्न से गुरुदेव की आराधना करें।

**गुरुवक्त्रेस्थिता विद्या गुरुभक्तया च लभ्यते ।**
**त्रैलोक्ये स्युर्न वक्तारो देवाद्या सुरपन्नगाः ।।३२।।**

अर्थ : गुरु के मुख में स्थित विद्या गुरु की भक्ति से प्राप्त होती है। तीनों लोकों में गुरु के सिवाय देवादि असुर और पन्नग कोई वक्ता नहीं हुआ है।

**गुकारस्त्वंधकारोस्ति रुकारस्तेज उच्यते ।**

**अज्ञानग्रासकं ब्रह्म गुरुरेव न संशयः ।।३३।।**

अर्थ : गुकार अन्धकार है, रूकार तेज कहलाता है। अज्ञान का ग्रास करनेवाला ब्रह्म गुरु ही है। इसमें संशय नहीं है।

**गुकारः प्रथमोवर्णो मायादि गुणभासकः ।**

**रुकारो द्वितीयो ब्रह्म मायाभ्रांतिविमोचकः ।।।।**

अर्थ : गुकार प्रथम वर्ण माया आदि गुण का भास करानेवाला है। दूसरा ब्रह्म रुकार है जो माया की भ्रांति का नाश करनेवाला है।

**एवं गुरुपदं श्रेष्ठं देवानामपि दुर्लभम् ।**

**हा हा हू हू गणैश्चैव गंधर्वाद्यैश्च पूज्यते ।।३५।।**

अर्थ : ऐसे गुरु के श्रेष्ठ पद देवताओं को भी दुर्लभ हैं ! हा हा हू हू गण (एक प्रकार के गंधर्व) और गंधर्वों से पूजन किए जाते हैं।

**एवं तेषांच सर्वेषां नास्ति तत्त्वं गुरोःपरम् ।**

**आसनं शयनं वस्त्रं वाहनं भूषणादिकम् ।।३६।।**

**साधकेन प्रदातव्यं गुरोः संतोष कारणम् ।**
**गुरोराराधनं कार्यं जीवत्वं च निवेदयेत् ॥३७॥**

अर्थ : इन सबमें गुरु से श्रेष्ठ परम तत्त्व नहीं है। आसन, शय्या, वस्त्र, वाहन, भूषणादिक गुरु के संतोष निमित्त साधक को देने चाहिए, गुरु की आराधना करनी चाहिए और जीवत्व को भी अर्पण कर देना चाहिए।

**कर्मणा मनसा वाचा सद्भिराराधयेद् गुरुम् ।**
**दीर्घदण्डं नमस्कृत्य निर्लज्जो गुरुसन्निधौ ॥३८॥**

अर्थ : सच्चे भाव से, कर्म से, मन से और वाणी से गुरुदेव की आराधना करें। लज्जा रहित होकर गुरुदेव के समीप लम्बे दण्ड के समान पृथ्वी पर लेटकर नमस्कार करें।

**शरीरमर्थसम्प्राप्तिं सद्गुरुभ्यो निवेदयेत् ।**
**कृमिविटभस्म निष्ठांन्तं दुर्गन्धमलमूत्रकम् ॥३९॥**

अर्थ : अन्त में कीड़ा, विट भस्म होनेवाले दुर्गन्ध मल और मूत्रवाले शरीर को, धन को और ऐश्वर्य को सद्गुरु को अर्पण कर देवें।

**श्लेष्मरक्तत्वचामांसं तनुरित्थं वरानने ।**
**संसार वृक्षमारुढ़ाः पतन्ति नरकार्णवे ॥४०॥**

अर्थ : हे सुन्दर मुखवाली ! कफ, लहू, खाल, मांसवाले शरीररूपी संसार वृक्ष पर चढ़े हुए जीव नरकरूपी संसार समुद्र में गिरते हैं।

**श्री गुरुचरणद्वन्द्वं यस्यां दिशि विराजते ।**
**तस्यै दिशै नमस्कुर्यात् भक्त्या प्रतिदिनं प्रिये ।।४१।।**

अर्थ : हे प्रिये ! श्री गुरुदेव के दोनों चरण जिस दिशा में विराज़ते है उस दिशा को प्रतिदिन भक्ति से नमस्कार करें।

**गुरुपाद-प्रसादेन ज्ञानमुत्पद्यते स्वयम् ।**
**यनोद्भूतमिदं विश्वं तस्मै श्रीगुरवे नमः ।।४२।।**

अर्थ : गुरुदेव के चरणों के प्रसाद से ज्ञान स्वयं उत्पन्न होता है। जिसने इस विश्व को धारण कर रखा है उन श्री गुरुदेव को नमस्कार है।

**गुरुर्ब्रह्मा गुरुर्विष्णु गुरुर्देवो महेश्वरः ।**
**गुरुरेव परं ब्रह्म तस्मै श्रीगुरवे नमः ।।४३।।**

अर्थ : गुरु ब्रह्मा हैं, गुरु विष्णु हैं, गुरु ही महेश्वर हैं। गुरु परंब्रह्म हैं। उन श्री गुरुदेव को नमस्कार है।

**अज्ञान तिमिरान्धस्य ज्ञानांजनशलाकया ।**
**चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ।।४४।।**

अर्थ : जिसने ज्ञानरूपी अंजन की सलाई से अज्ञानरूपी अंधेरे से अन्धी हुई आंखों को खोल दिया है, उन श्री गुरुदेव को नमस्कार है।

**अखण्ड मण्डलाकारं व्याप्तं येन चराचरम् ।**
**तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ।।४५।।**

अर्थ : जिसने अखण्ड मंडलाकार चराचर को व्याप्त कर रक्खा है उस पद को जिसने दिखला दिया है उन श्री गुरुदेव को नमस्कार है।

**सर्वश्रुतिशिरोरन्तविराजितपदाम्बुजम् ।**
**वेदान्ताम्बुजसूर्योयो तस्मै श्री गुरवे नमः ।।४६।।**

अर्थ : सब श्रुतियों के शिरोरत्न से शोभायमान चरण कमलवाले जो गुरुदेव वेदान्त कमल के सूर्य रूप हैं उन श्री गुरुदेव को नमस्कार है।

**यस्य स्मरण मात्रेण ज्ञानमुत्पद्यते स्वयम् ।**
**सदैव सर्व सम्पत्ति तस्मै श्री गुरवे नमः ।।४७।।**

अर्थ : जिनके स्मरण मात्र से ज्ञान स्वयं उत्पन्न होता है, सदा ही सर्व सम्पत्ति प्राप्त होती है उन श्री गुरुदेव को नमस्कार है।

**चैतन्यं शाश्वतं शान्तं व्योमातीतं निरंजनम् ।**
**बिन्दुनादकलातीतं तस्मै श्रीगुरवे नमः ।।४८।।**

अर्थ : चैतन्य, शाश्वत, शान्त, आकाश से परे, माया रहित, बिन्दुनाद और कला से अतीत उन श्री गुरुदेव को नमस्कार है।

**स्थावरं जंगमं चैवमचरं चरमेव च ।**

**येन व्याप्तं जगत्सर्वं तस्मै श्री गुरवे नमः ।।४९।।**

अर्थ : जिसने स्थावर, जंगम, चर, अचर, सब जगत् को व्याप्त कर रक्खा है उन श्री गुरुदेव को नमस्कार है।

**ज्ञानशक्तिसमारूढ़ तत्त्व-माला-विभूषितम् ।**

**भुक्ति-मुक्ति-प्रदातारं तस्मै श्री गुरवे नमः ।।५०।।**

अर्थ : ज्ञानशक्ति पर आरुढ़, तत्त्व माला से शोभित, भोग और मोक्ष के देनेवाले उन श्री गुरुदेव को नमस्कार है।

**अनेक जन्म संप्राप्तकर्मबन्ध विदाहिने ।**

**स्वात्मज्ञान प्रदानेन तस्मै श्री गुरवे नमः ।।५१।।**

अर्थ : अपने आत्मा के ज्ञान के प्रदान से अनेक जन्मों से प्राप्त हुए कर्मरूप बन्धन को जलानेवाले उन श्री गुरुदेव को नमस्कार है।

**शोषणं भव सिंधोश्च दीपनं ज्ञान संपदाम् ।**

**गुरु पादोदकं सम्यक् तस्मै श्री गुरवे नमः ।।५२।।**

अर्थ : गुरु का चरणोदक संसाररूपी समुद्र को सुखानेवाला और ज्ञानरूपी सम्पत्ति को पूर्ण प्रकाश करनेवाला है। उन श्री गुरुदेव को नमस्कार है।

**न गुरोरधिकं तत्त्वं न गुरोरधिकं तपः ।**
**गुरुज्ञानात्परं तत्त्वं तस्मै श्री गुरवे नमः ।।५३।।**

अर्थ : गुरु से अधिक तत्त्व नहीं है न गुरु से अधिक तप है गुरु के ज्ञान से परम तत्त्व का ज्ञान होता है। उन श्री गुरुदेव को नमस्कार है।

**मन्नाथस्त्रिजगन्नाथो मद्गुरुस्त्रिजगद्गुरुः ।**
**ममात्मासर्व भूतात्मा तस्मै श्रीगुरवे नमः ।।५४।।**

अर्थ : मेरा नाथ तीनों जगत् का नाथ है, मेरा गुरु तीनों जगत् का गुरु है, मेरी आत्मा सब प्राणियों की आत्मा है। उन श्री गुरुदेव को नमस्कार है।

**ध्यानमूलं गुरोर्मूर्तिः पूजामूलं गुरोःपदम् ।**
**मन्त्रमूलं गुरोर्वाक्यं मोक्षमूलं गुरोः कृपा ।।५५।।**

अर्थ : गुरु मूर्ति का ध्यान मुख्य ध्यान है, गुरुचरण की पूजा मुख्य पूजा है, गुरु का वाक्य मूल मन्त्र है, गुरु की कृपा मोक्ष का कारण है।

**गुरुरादिरनादिश्च गुरुः परम दैवतम् ।**
**गुरु मन्त्रसमो नास्ति तस्मै श्री गुरवे नमः ।।५६।।**

अर्थ : गुरु आदि हैं, गुरु अनादि हैं, गुरु परम देव हैं। गुरु के समान और मन्त्र नहीं है उन श्री गुरुदेव को नमस्कार है।

**सप्त सागर पर्यन्तं तीर्थस्नानादिकैः फलम् ।**
**गुरु पादोदकस्यापि सहस्त्रांशेन दुर्लभम् ।।५७।।**

अर्थ : सात सागर पर्यन्त तीर्थ स्नानादिक का फल गुरुदेव के चरणोदक के हज़ारवें अंश के बराबर नहीं है इसलिए गुरुदेव का चरणोदक दुर्लभ है।

**गुरुरेव जगत्सर्वं ब्रह्मा विष्णु शिवात्मकम् ।**
**गुरोः परतरं नास्ति तस्मात्संपूजयेद् गुरुम् । ।।५८।।**

अर्थ : ब्रह्मा, विष्णु और शंकर जी से व्याप्त यह सारा जगत् गुरु ही है। गुरु से श्रेष्ठ कोई नहीं है। इसलिए भली प्रकार से गुरुदेव का पूजन करें।

**ज्ञान विज्ञान मुक्तिश्च लभ्यते गुरु भक्तितः ।**
**गुरोः समंततो नान्यत् साध्योऽसौ गुरुमार्गिणा ।।५९।।**

अर्थ : गुरु की भक्ति से ज्ञान विज्ञान और मोक्ष प्राप्त होता है इसलिए गुरु के समान अन्य कोई नहीं है। गुरु मार्ग के अवलम्बन करनेवाले को गुरु ही साध्य हैं।

**यस्मात्परतरं नास्ति नेति नेतीति वै श्रुतिः ।**
**मनसा वचसाचैव सर्वदाराध येद् गुरुम् ।।६०।।**

अर्थ : जिससे परे कोई नहीं है, जिसे श्रुति नेति नेति कहती है, अत एव मन से, वाणी से सदा उन परब्रह्म स्वरूप गुरुदेव की आराधना करें।

**गुरोः कृपा प्रसादेन ब्रह्मा विष्णु महेश्वराः ।**
**सामर्थ्य तत्प्रसादेन केवलं गुरुसेवया ।।६१।।**

अर्थ : ब्रह्मा, विष्णु और महेश्वर गुरु की कृपा के प्रसाद से हुए हैं। केवल गुरु की सेवा करने से और गुरु के प्रसाद से उनको सामर्थ्य प्राप्त होता है।

**देव किन्नरगन्धर्वाः पितृयक्षाश्च चारणाः ।**
**मुनयोऽपि न जानन्ति गुरुशुश्रूषणा विधिम् ।।६२।।**

अर्थ : देवता, किन्नर, गंधर्व, पितृ, यक्ष, चारण और मुनि भी गुरु शुश्रूषा की विधि नहीं जानते।

**मदाहंकारगर्वेण तपो विद्याबलाधिकाः ।**
**संसार-कुहरावर्ते घटयन्त्रं यथा पुनः ।।६३।।**

अर्थ : मद, अहंकार और गर्व से तप, विद्या और बल के अधिक होने पर भी ये जीव घटीयंत्र के समान संसाररूपी गड्ढे में गिरते हैं।

**न मुक्ता देवगन्धर्वाः पितरो यक्ष किन्नराः ।**
**ऋषयः सर्वसिद्धाश्च गुरुसेवा पराङ्मुखाः ।।६४।।**

अर्थ : देवता, गंधर्व, पितृ, यक्ष, किन्नर, ऋषि और सब सिद्ध गुरु सेवा से विमुख होने से मुक्त नहीं हुए हैं।

**ध्यानं श्रृणु महादेवि सर्वानन्द प्रदायकम् ।**
**सर्व सौरव्यप्रदं चैव भुक्ति मुक्ति प्रदायकम् ।।६५।।**

अर्थ : हे महादेवी ! सब आनन्द के देनेवाले, सर्व सुख के देनेवाले, भुक्ति और मुक्ति के देनेवाले ध्यान को सुनो।

**श्रीमत्परं ब्रह्मगुरुं नमामि श्रीमत्परं ब्रह्मगुरुं भजामि ।**
**श्रीमत्परं ब्रह्मगुरुं वदामि श्रीमत्परं ब्रह्मगुरुं स्मरामि ।।६६।।**

अर्थ : श्रीमान् ! परंब्रह्म रूप गुरु को मैं नमस्कार करता हूं। श्रीमान् परंब्रह्म रूप गुरु को मैं भजता हूं। श्रीमान् परंब्रह्म रूप गुरु का मैं कथन करता हूं। श्रीमान् परंब्रह्म रूप गुरु को मैं स्मरण करता हूं।

**ब्रह्मानन्दं परम सुखदं केवल ज्ञानमूर्ति**
**द्वंद्वातीतं गगन सदृशं तत्त्वमस्यादि लक्ष्यम् ।**
**एकं नित्यं विमलमचलं सर्वदा साक्षिभूतं**
**भावातीतं त्रिगुण रहितं सद्गुरुं तन्नमामि ।।६७।।**

अर्थ : ब्रह्मानन्द स्वरूप, परम सुख देनेवाले, केवल ज्ञानमूर्ति, द्वन्द्व से परे, आकाश के समान सर्व व्यापी, तत्त्वमसि आदि महावाक्य के लक्ष्य, एक, नित्य, निर्मल, अचल, सदा साक्षी स्वरूप, भाव से अतीत, तीनों गुणों से रहित उन सद्गुरुदेव को नमस्कार करता हूं।

**आनन्दमानन्दकरं प्रसन्नं**
**ज्ञानस्वरूपं निजबोधरूपम् ।**
**योगीन्द्रमीड्यं भवरोग वैद्यं**
**श्रीमद्गुरुं नित्यमहं नमामि ।।६८।।**

अर्थ : आनन्द स्वरूप, आनन्द करनेवाले, प्रसन्न, ज्ञानस्वरूप, निज बोधरूप, योगियों के राजा, पूज्य संसाररूपी रोग के वैद्य, श्रीमान गुरुदेव को मैं नित्य नमस्कार करता हूं।

**हृद्यम्बुजे कर्णिकमध्यसंस्थं**
**सिंहासने संस्थित दिव्यमूर्तिम् ।**
**ध्यायेद्गुरुं चन्द्रकला प्रकाशं**
**सच्चित्सुखं इष्ट फलप्रदानम् ।।६९।।**

अर्थ : हृदय कमल के कोश मध्य स्थित; सिंहासन पर विराजमान, दिव्य मूर्ति, सत्चित् आनन्द स्वरूप, इष्ट फल देनेवाले, चन्द्रकला के समान प्रकाशवाले सद्गरुदेव का ध्यान करें।

**नित्यं शुद्धं निराभासं निराकारं निरंजनम् ।**
**नित्यं बोधं चिदानन्दं गुरुं ब्रह्म नमाम्यहम् ।।७०।।**

अर्थ : नित्य, शुद्ध, आभास रहित, आकार रहित, माया रहित, नित्य बोध स्वरूप, चेतन, आनन्द रूप, श्री रूप गुरु ब्रह्म को मैं नमस्कार करता हूं।

**न गुरोरधिकं न गुरोरधिकं न गुरोरधिकं न गुरोरधिकम् ।**
**शिवशासनतः शिवशासनतः शिवशासनतः शिवशासनतः ।।७१।।**

अर्थ : शिव के उपदेश से गुरु से कोई भी अधिक नहीं है। शिव के उपदेश से गुरु से कोई भी अधिक नहीं है। शिव के उपदेश से गुरु से कोई भी अधिक नहीं हैं। शिव के उपदेश से गुरु से कोई भी अधिक नहीं है।

**इदमेव शिवम् इदमेव शिवम् इदमेव शिवम् इदमेव शिवम्।**
**ममशासनतो ममशासनतो ममशासनतो ममशासनतो ।।७२।।**

अर्थ : मेरे अनुसार श्री गुरु-ज्ञान ही कल्याणकारी है मेरे अनुसार श्री गुरुज्ञान ही कल्याणकारी है मेरे अनुसार श्री गुरु-ज्ञान ही कल्याणकारी है।

**एवं विधं गुरुं ध्यात्वा ज्ञानमुत्पद्यते स्वयम् ।**
**तदा गुरूपदेशेन मुक्तोऽहमिति भावयेत् ।।७३।।**

अर्थ : इस प्रकार गुरु का ध्यान करने से ज्ञान स्वयं ही उत्पन्न होता है इसलिए ऐसी भावना करें कि गुरु के उपदेश से मैं मुक्त हुआ हूं।

**गुरु संदर्शिते मार्गे मनः शुद्धकृते यदा ।**
**अनित्यं खण्डयेत्सर्वं यत्किंचिद् दृष्टिगोचरम् ।।७४।।**

अर्थ : जब गुरु के दिखलाये हुए मार्ग से मन शुद्ध कर लिया जाता है तब जो दृष्टि का विषय है, उस सब अनित्य को तोड़ डालता है अर्थात् मोह छूट जाता है।

**ज्ञेयं सर्वमनित्यं च ज्ञानं च मम चोच्यते ।**
**ज्ञानं ज्ञेयं समं कुर्यान्नान्योऽस्ति द्वितीयकः ।।७५।।**

अर्थ : सम्पूर्ण ज्ञेय (दृश्य) अनित्य है और ज्ञान मेरा कहलाता है। ज्ञान और ज्ञेय को समान कर ले तो द्वैत नहीं रहता।

**एवं श्रुत्वा महादेवि गुरुनिन्दां करोतियः ।**
**स याति नरकं घोरं यावच्चन्द्र दिवाकरौ ।।७६।।**

अर्थ : हे पार्वती ! इस प्रकार सुनकर जो गुरुदेव की निन्दा करता है वह जब तक चन्द्र और सूर्य है तब तक घोर नरक में पड़ता है।

**यावत् कल्पांतको देहस्तावद्देवि गुरुं स्मरेत् ।**
**गुरुलोपो न कर्तव्यः स्वच्छंदो यदि भावयेत् ।।७७।।**

अर्थ : कल्पांत तक जब तक देह है तब तक गुरु का स्मरण करें। यदि स्वच्छन्द (मुक्त) होने की इच्छा हो तो गुरु का लोप न करें।

**हुंकारेण न वक्तव्यं प्राज्ञशिष्यैः कदाचन ।**
**गुरोरग्रे न वक्तव्यं असत्यं च कदाचन ।।७८।।**

अर्थ : बुद्धिमान शिष्यों को कभी "हुम्" इस अहंकार या उपेक्षा भरे शब्द से बोलना न चाहिए और गुरुदेव के सामने कभी झूठ न बोलना चाहिए।

**गुरुं हुंकृत्य त्वंकृत्यं गुरुं निर्जित्य वादतः ।**
**अरण्ये निर्जले देशे संभवेद् ब्रह्म राक्षसः ।।७९।।**

अर्थ : गुरुदेव से "हुम्" (उपेक्षा) तू, तुम कहकर बात नहीं करनी चाहिए, आप कहकर बात करनी चाहिए तथा तर्क-वितर्क के द्वारा गुरुदेव को जीत लेने पर भी क्षमा प्रार्थना करें अन्यथा निर्जल स्थान में ब्रह्म-राक्षस होता है।

**मुनिर्भिपन्नगैर्वाऽपि सुरैर्वा शापितो यदि ।**
**काल मृत्यु भयाद्वापि गुरूः रक्षति सर्वदा ।।८०।।**

अर्थ : यदि मुनियों से, सर्पों से अथवा देवताओं से शाप दिया गया हो तो उस शाप से काल और मृत्यु के भय से भी गुरुदेव सदा रक्षा करते हैं।

**अशक्ता हि सुराद्याश्च अशक्ताः मुनयस्तथा ।**
**गुरु शापहताः क्षीणाः क्षयं याति न संशयः ।।८१।।**

अर्थ : देवादिक सामर्थ्य रहित हैं, मुनि सामर्थ्य रहित हैं। गुरु का शाप लगने से क्षय हो जाते हैं। इसमें संशय नहीं है।

**मन्त्रराजमिदं देवी गुरुरित्यक्षरद्वयम् ।**
**श्रुतिवेदान्त वाक्यानां गुरुः साक्षात्परं पदम् ।।८२।।**

अर्थ : हे देवी ! श्रुति और वेदान्त वाक्यों में "गुरु" यह दो अक्षर मंत्रराज हैं। गुरु साक्षात् परम पद हैं।

**गुकारं च गुणातीतं रुकारं रूप वर्जितम् ।**
**गुणातीतमरुपंच यो हिस्यात्सो गुरुः स्मृतः ।।८३।।**

अर्थ : गुकार गुणों से अतीत है, रुकार रूप से रहित है, जो गुणों से अतीत और रूप रहित है वह गुरु कहलाता है।

**श्रुति स्मृतिमविज्ञाय केवलं गुरु सेवकाः ।**
**ते वै सन्यासिनः प्रोक्ता इतरे वेषधारिणः ।।८४।।**

अर्थ : श्रुति स्मृति को न जानकर भी जो केवल गुरु के सेवक हैं वे ही सन्यासी कहलाते हैं अन्य केवल सन्यासी के वेषधारी हैं यदि गुरु की सेवा नहीं करते हैं।

**गुरोः कृपाप्रसादेन स्वात्मारामो हि लभ्यते ।**
**अनेन गुरु मार्गेण ह्यंतर्ज्ञानं प्रवर्तते ।।८५।।**

अर्थ : गुरुदेव की कृपा के प्रसाद से अपने आत्मा आनन्द स्वरूप को प्राप्त होता है। इस मार्ग से अन्तर्ज्ञान उदय होता है।

**आब्रह्म स्तंब पर्यन्तं परमात्म स्वरूपिणम् ।**
**स्थावरं जंगमं चैव प्रणमामि जगन्मयम् ।।८६।।**

अर्थ : ब्रह्मा से छोटे पौधे पर्यन्त परमात्मा के स्वरूप हैं। जगन्मय स्थावर और जंगम परमात्मा को प्रणाम करता हूं।

**वंदेऽहं सच्चिदानन्दं भेदातीतं जगद्गुरुम् ।**
**नित्यं पूर्णं निराकारं निर्गुणं स्वात्म संस्थितम् ।।८७।।**

अर्थ : सच्चिदानन्द स्वरूप, भेद से अतीत, नित्य पूर्ण आकार रहित, गुण रहित स्वात्मा में स्थित जगद्गुरु की मैं वन्दना करता हूं।

**परात्परतरं ध्येयं नित्यमानन्द कारकम् ।**
**हृद्व्याकाश मध्यस्थं शुद्ध स्फटिक सन्निभम् ॥८८॥**

अर्थ : पर से अत्यन्त परे, ध्यान करने योग्य, नित्य आनन्द करनेवाले, हृदय आकाश के मध्य में स्थित, शुद्ध स्फटिक मणि के समान कांतिवाले।

**स्फटिक प्रतिमा रूपं दृश्यते दर्पणे यथा ।**
**तथात्मानं चिदाकारमानन्दं सोहमित्युत ॥८९॥**

अर्थ : जिस प्रकार स्फटिक मणि प्रतिमा रूप से दर्पण में दिखाई देता है उसी प्रकार आत्मा चेतन आकार में आनन्द स्वरूप है; वह आनन्द ही मैं हूं।

**अंगुष्ठ मात्र पुरुषं ध्यायते चिन्मयं हृदि ।**
**तत्र स्फुरति भावोऽयं पश्य तत्कथयाम्यहम् ॥९०॥**

अर्थ : चेतन स्वरूप, अंगुष्ठ मात्र पुरुष को हृदय में ध्यान करने से जो भाव स्फुरता है, उसको देख मैं कहता हूं।

**अगोचरं तथाऽगम्यं रूपनामादि वर्जितम् ।**
**निःशब्दं तु विजानीयात् स्वभावो ब्रह्म पार्वती ॥९१॥**

अर्थ : हे पार्वती ! इन्द्रियों का अविषय, अगम्य, रूप नाम आदि से रहित, शब्द रहित को ब्रह्म का स्वभाव जानें। अर्थात् मन का निर्विकार मौन भाव ही ब्रह्म है। जैसे गूंगे का स्वाद। '६०"

**यथा निज स्वभावेन कर्पूर कुंकुमादिषु ।**
**शीतोष्णादि स्वभावेन तथा ब्रह्म च शाश्वतम् ॥९२॥**

अर्थ : जिस प्रकार कपूर कुंकुम आदि के अपने अपने स्वभाव शीतोष्णादि हैं उसी प्रकार ब्रह्म का शाश्वतता ही स्वभाव है।

**स्वयं सर्वमयो भूत्वा स्थातव्यं यत्र कुत्रचित् ।**
**कीट भ्रमरवत्तत्र ध्यानं भवति तादृशम् ॥९३॥**

अर्थ : सर्वमय होकर जहां तहां स्वयं स्थित हो, जैसे कीट सदा भ्रमर का ही ध्यान करता है उसी प्रकार सर्वत्र ब्रह्म का ही ध्यान होता है।

**गुरुध्यानं तथा कृत्वा स्वयं ब्रह्ममयो भवेत् ।**
**पिण्डे पदे तथा रूपे मुक्तास्ते नात्र संशयः ॥९४॥**

अर्थ : पिंड में, पद (स्थान या शब्द) में तथा रूप में गुरुदेव का ध्यान करके स्वयं ब्रह्ममय हो जावे, जो ऐसे ध्यानवाले हैं वे मुक्त हैं, इसमें संशय नहीं है।

**पार्वत्युवाचः पिण्डं किन्तु महादेव पदंकिं समुदाहृतम् ।**
**रूपं च रूपातीतं च यदिहारव्याहि शंकर ॥९५॥**

अर्थ : पार्वतीजी ने कहा - हे महादेव ! पिंड क्या है? पद किसको कहते हैं? हे शंकर ! रूप और रूप से अतीत को भी कहिए।

**शिव उवाचः पिंड कुंडलिनी शक्तिः पदं हंस उदाहृतः ।**
**रूपं विन्दुरितिज्ञेयं रूपातीतं निरंजनम् ॥९६॥**

अर्थ : शिवजी ने कहा पिंड कुंडलिनी शक्ति है, पद हंस कहलाता है। रूप को बिन्दु जानना चाहिए, रूप से अतीत निरंजन है।

**यस्यावलोकनादेव सर्वसंग विवर्जितः ।**
**एकाकी निःस्पृहः शान्तः स्थातव्यं तत्प्रसादतः ॥९७॥**

अर्थ : जिस निरंजन ब्रह्म को देखने से आसक्ति (मोह) रहित हो जाता है उसके प्रसाद से ही, संग से रहित, अकेला रहना, स्पृहा रहित और शान्त हो जाता है।

**गुरु ध्यानात्तथात्यन्तं स्वयं ब्रह्ममयो भवेत् ।**
**परात्परतरं नान्यत् सर्वमेव निरालयम् ॥९८॥**

अर्थ : गुरुदेव के अत्यन्त ध्यान से स्वयं ब्रह्ममय हो जाता है। पर से भी परे अन्य कोई नहीं, सब ही आधार रहित है।

**लब्धंवाथ न लब्धंवा स्वल्पंवा बहुलं तथा ।**
**निष्कामेनैव भोक्तव्यं सदा संतुष्ट मानसः ॥९९॥**

अर्थ : प्राप्त हुआ अथवा न प्राप्त हुआ, थोड़ा अथवा बहुत सदा संतुष्ट मन से निष्काम होकर भोगना चाहिए।

**सर्वज्ञपदमित्यत्र देही सर्वमयो भवेत् ।**
**सदानन्दः सदा शान्तो रमते यत्र कुत्रचित् ।।१००।।**

अर्थ : देही सर्वज्ञ पद को प्राप्त हुआ सर्वमय हो जाता है। जहां तहां नित्य आनन्द में सदा शांत रहता हुआ रमण करता है।

**यत्रावतिष्ठते सोऽपि स देशः पुण्यभाजनः ।**
**मुक्तस्य लक्षणं देवि तवाग्रे कथितं मया ।।१०१।।**

अर्थ : जहां वह गुरु निवास करता है वह देश ही पुण्य का पात्र है। हे देवी ! मैंने तुमसे जीवन्मुक्ति के लक्षण कहे।

**उपदेशो मया देवि गुरुमार्गेण दर्शितः ।**
**गुरु भक्तिस्तथा ध्यानं सकलं तव कीर्तितम् ।।१०२।।**

अर्थ : हे देवी ! गुरु मार्ग से मैंने तुम्हें उपदेश दिखलाया है। गुरु भक्ति तथा ध्यान भी सब मैंने तुमसे कहा है।

**अनेन यद्भवेत्कार्यं तद्वदामि महाशये ।**
**लोकोपकारकं देवि लौकिकं तु न भावयेत् ।।१०३।।**

अर्थ : इससे जो कार्य होता है, हे देवी ! मैं कहता हूं। वह लोक का उपकार करनेवाला है । किन्तु उसे कोई लौकिक न समझे।

**लौकिकं भावयन्त्यज्ञास्ते हि यान्ति भवार्णवम् ।**
**ज्ञानी च भावयेत्सर्वं कर्म निष्कर्म शाम्यति ।।१०४।।**

अर्थ : अज्ञानी लौकिक भावना करते हैं वे संसार समुद्र में गिरते हैं। ज्ञानी सर्व कर्म निष्काम भावना से करते हैं। इस प्रकार कर्म का बन्धन शान्त हो जाता है।

**इदन्तु भक्ति भावेन पठ्यते श्रूयतेऽथवा ।**
**लिखित्वा तत्प्रदातव्यं दान दक्षिणया सह ।।१०५।।**

अर्थ : इसको भक्तिभाव से पढ़े अथवा सुने अथवा लिखकर दान और दक्षिणा सहित प्रदान करे।

**गुरुगीतामिदं देवि शुद्धं तत्त्वं मयोदितम् ।**
**भवव्याधि विनाशार्थं त्विदमेव जपेत्सदा ।।१०६।।**

अर्थ : हे देवी ! यह शुद्ध तत्त्व गुरुगीता के रूप में मैंने कहा है। संसार रूप व्याधि को नाश करने के लिए इसको सदा जपें।

**गुरुगीताक्षरैकैकं मन्त्रराजमिदं प्रिये ।**
**अन्ये च विविधा मन्त्राः कलां नार्हन्ति षोडशीम् ।।१०७।।**

अर्थ : हे प्रिये ! इस गुरुगीता का एक एक अक्षर मंत्रराज रूप है अनेक प्रकार के अन्य मंत्र इसके सोलहवे अंश के भी बराबर नहीं है।

**सर्व पापहरं चैव सर्व दारिद्रय नाशनम् ।**

**यक्ष राक्षस भूतादि चौर व्याध्रभयापहम् ॥१०८॥**

अर्थ : यह मन्त्रराज सब पापों को हरनेवाला है। सारी दरिद्रता को नाश करनेवाला है और यक्ष, राक्षस, भूतादि, चोर और व्याध्र के भय को दूर करनेवाला है।

**यं यं चिंतयते कार्यं तंतमाप्नोति निश्चयम्ः ।**

**कामितस्य कामधेनुः कल्पितस्य सुरद्रुमः ॥१०९॥**

अर्थ : जो जो कार्य सोचा जाता है सो सो निश्चय प्राप्त होता है। कामना करनेवाले को कामधेनु है, कल्पना करनेवाले को कल्पवृक्ष है।

**चिन्तामणिः चिन्तितस्य सर्व मंगल कारकम् ।**

**मोक्ष कामो जपेन्नित्यं मोक्षसिद्धिमवाप्नुयात् ॥११०॥**

अर्थ : चिन्तन करनेवालों को सब मंगल की देनेवाली चिन्तामणि है। मोक्ष की कामनावाला नित्य जपे तो मोक्ष सिद्धि को प्राप्त होवे।

**यद्यत्कामं जपेद्यौ वै स्तत्तत्कामफलं लभेत् ।**

**अनन्त फलमाप्नोति गुरुगीता जपेन तु ॥१११॥**

अर्थ : जो जिस कामना से जप करे वह उस कामना के फल को निश्चय प्राप्त कर सकता है और गुरुगीता के जपने से तो अनन्त फल को प्राप्त होता है।

**जपेच्छाक्तश्च शैवश्च गाणपत्यश्च वैष्णवः ।**
**सौरश्च सिद्धिदं देवि सत्यं सत्यं न संशयः ।।११२।।**

अर्थ : शाक्त-शक्ति को माननेवाला, शैव-शिव को माननेवाला, गाणपत्य-गणेश को माननेवाला, वैष्णव-विष्णु को माननेवाला, सौर-सूर्य का उपासक जो जपे उसको सिद्धि देनेवाला है। हे देवी ! यह सत्य है, संशय नहीं।

**संसार मल नाशार्थं परमानन्द सिद्धये ।**
**गुरुगीताम्भसि स्नानं तत्त्वज्ञः कुरुते सदा ।।११३।।**

अर्थ : संसार रूप मल को नाश करने के लिये और परमानन्द की सिद्धि के लिये तत्त्वज्ञ पुरुष सदा गुरुगीता रूप जल में स्नान करता है।

**स एव गुरुवत् साक्षात् सदा सद्ब्रह्मवित्तमः ।**
**तस्य स्थानानि सर्वाणि पवित्राणि न संशयः ।।११४।।**

अर्थ : सदा सत् ब्रह्म को जाननेवाला साक्षात् गुरु के समान है। उसके लिए सब स्थान पवित्र हैं इसमें संशय नहीं है।

**सैषा श्रद्धा पवित्रोऽसौ स्वभावाद्यत्र तिष्ठति ।**
**तत्र देवगणाः सर्वे क्षेत्रपीठे वसन्तिहि ।।११५।।**

अर्थ : इस गीता पर स्वभाव से ही जिसकी श्रद्धा है वह पवित्र है जहां वह रहता है, उस क्षेत्रपीठ में सब देवगण रहते हैं।

**आसनस्थः शयानो वा गच्छतः तिष्ठतोऽविवा ।**
**अश्वारूढो गजारूढः सुषुप्तो जाग्रतोऽपिवा ।।११६।।**
**शुचिरेव सदा ज्ञानी गुरुगीता जपेन तु ।**
**तस्य दर्शन मात्रेण पुनर्जन्म न विद्यते ।।११७।।**

अर्थ : आसन पर बैठा हुआ, सोता हुआ, जाता हुआ, बैठा हुआ, घोड़े पर चढ़ा हुआ, हाथी पर चढ़ा हुआ, सोता हुआ अथवा जागता हुआ, ज्ञानी गुरुगीता के जाप करने से सदा पवित्र ही है। उसके दर्शन मात्र से ही फिर जन्म नहीं होता।

**समुद्रस्य यथातोयं क्षीरे क्षीरं जले जलम् ।**
**भिन्ने कुम्भे यथाकाशः तथात्मा परमात्मनि ।।११८।।**

अर्थ : जिस प्रकार समुद्र का जल, दूध में दूध, जल में जल है, भिन्न भिन्न कुम्भों में जैसे आकाश है इसी प्रकार परमात्मा में आत्मा है ।

अर्थात्

जैसे घट फूटने पर भीतर का आकाश महाकाश में मिलकर एक हो जाता है उसी प्रकार जीवात्मा भी परमात्मा में मिलकर एक हो जाता है।

**तथैव ज्ञानी जीवात्मा परब्रह्मणि लीयते ।**
**ऐक्येन रमते ज्ञानी यत्र कुत्र दिवानिशम् ।।११९।।**

अर्थ : इसी प्रकार ज्ञानी का जीवात्मा परब्रह्म में लय हो जाता है। ज्ञानी जहां तहां एक रूप होकर रात-दिन रमण करता है।

**एवं विधो महामुक्तः सर्वदा वर्तते तु यः ।**
**तस्य सर्व प्रयत्नेन भक्तिभावं करोति यः ।।१२०।।**

अर्थ : इस प्रकार जो महामुक्त के अनुसार सदा वर्तता है और जो सर्व प्रयत्न से उस जीवनमुक्त का भक्तिभाव करता है वह भी मुक्त हो जाता है।

**गुरौ संतोषिते सर्वे मुक्तास्ते नात्र संशयः ।**
**भुक्ति मुक्त्युदयस्तेषां कराग्रे वर्तते सदा ।।१२१।।**

अर्थ : वे सब साधक गुरु को सन्तुष्ट करने से ही मुक्त हुए हैं इसमें संशय नहीं है। भोग, मोक्ष और ऐश्वर्य सदा उनके हाथ में हैं।

**अनेन प्राणिनः सर्वे गुरुगीता जपेन तु ।**
**सर्व सिद्धिमवाप्नोति भुक्तिं मुक्तिंन संशयः ।।१२२।।**

अर्थ : इस गुरुगीता के जप से सब प्राणी सर्व सिद्धि, भुक्ति और मुक्ति को प्राप्त करेंगे, इसमें संशय नहीं है।

**सत्यं सत्यं पुनः सत्यं धर्मशास्त्रं मयोदितम् ।**
**गुरुगीता समं नास्ति नास्ति तत्त्वं गुरोः परम् ।।१२३।।**

अर्थ : मेरी कही हुई गुरुगीता के समान कोई धर्म ग्रन्थ नहीं है और गुरु से श्रेष्ठ परम तत्त्व नहीं है। यह सत्य है, सत्य है और सदा सत्य है।

**गुरुर्देवो गुरुर्धर्मो गुरु र्निष्ठा परंतपः ।**
**गुरोः परतरं नास्ति सत्यं सत्यं वरानने ।।१२४।।**

अर्थ : गुरु देव है, गुरु धर्म है, गुरु निष्ठा ही परम तप है, गुरु से श्रेष्ठ कोई नहीं है। हे सुन्दर मुखवाली पार्वती ! यह सत्य है, सत्य है।

**धन्या माता पिता धन्यो धन्यो वंशः कुलं तथा ।**
**धन्या च वसुधा देवि गुरुभक्तिः सुदुर्लभा ।।१२५।।**

अर्थ : हे देवी ! गुरु भक्ति दुर्लभ है। जिसके हृदय में गुरु भक्ति का उदय है उसकी माता धन्य है, उसका पिता धन्य है, उनका वंश तथा कुल धन्य है और जहां वह वास करता है, वह पृथ्वी भी धन्य है।

**शरीरमिन्द्रिय प्राणा अर्थः स्वजन बांधवाः ।**
**माता पिता कुलं दैवं गुरुरेव न संशयः ।।१२६।।**

अर्थ : शरीर, इन्द्रिय, प्राण, धन, स्वजन, बांधव, माता, पिता, कुल और देव गुरु ही हैं, इसमें संशय नहीं है।

**आकल्प जन्मनः कोट्यां यज्ञ व्रत तपः क्रियाः ।**
**तत्सर्वं सफलं देवि गुरु सन्तोष मात्रतः ।।१२७।।**

अर्थ : हे देवी ! कल्प से लेकर करोड़ों जन्मों तक किए हुए यज्ञ, तप, व्रत और क्रिया ये सब गुरुदेव के संतोष मात्र से सफल हैं।

**विद्या धन मदेनैव मन्दभाग्याश्च ये नराः ।**
**गुरुसेवां न कुर्वन्ति सत्यं सत्यं वदाम्यहम् ।।१२८।।**

अर्थ : जो मनुष्य विद्या और धन के मद से गुरु की सेवा नहीं करते वे मंद भाग्यवाले हैं। हे देवी ! मैं सत्य कहता हूं।

**ब्रह्मा विष्णु महेशादि देव्वर्षि पितृ किन्नराः ।**
**सिद्ध चारणयक्षाश्च ह्यन्येऽपि मुनयोये जनाः ।।१२९।।**

अर्थ : ब्रह्मा, विष्णु, महेशादि देवता, ऋषि, पितृ, किन्नर, सिद्ध, चारण, यक्ष और अन्य मुनि लोग भी गुरु की सेवा करते हैं। क्योंकि -

**गुरुसेवा परं तीर्थं अन्यतीर्थं निरर्थकम् ।**
**सर्वतीर्थानि देवेशि सद्गुरोश्चरणाम्बुजे ।।१३०।।**

अर्थ : गुरु सेवा परम तीर्थ है, अन्य तीर्थ निरर्थक हैं; हे देवेश्वरी। सद्गुरुदेव के चरण कमल में सर्व तीर्थ हैं।

**सर्वं तीर्थं फलं देवि पदांगुष्टे च वर्तते ।**
**अतः पूर्वं मयादेवि न कस्य कथितं प्रिये ।।१३१।।**

अर्थ : हे देवी ! सद्‌गुरु के पैर के अंगूठे में सब तीर्थों का फल है। हे प्रिये, हे देवी ! मैंने यह अब तक किसी से नहीं कहा है।

**रहस्येदं न वक्तव्यं तवाग्रे कथितं मया ।**
**सुगोप्यं च प्रयत्नेन येनात्मत्वमवाप्स्यसि ।।१३२।।**

अर्थ : इस रहस्य को कहना नहीं चाहिए, आपके सन्मुख मैंने कहा है, प्रयत्न से गुप्त रखने योग्य है, जिससे तुम्हे आत्मत्व की प्राप्ति होगी।

**मनसापि न वक्तव्यं मम सान्निध्यकारकम् ।**
**असितं चित्तविभ्रान्तं श्रद्धाभावं विलोक्य वै ।।१३३।।**

अर्थ : मेरी समीपता देनेवाले इस रहस्य को मन से पापी और भ्रांत चित्तवाले को उसकी श्रद्धाभक्ति देखकर भी नहीं कहना चाहिए क्योंकि उसमें छल भी हो सकता है। इससे पूर्ण परीक्षा कर लेना अत्यावश्यक है।

**प्रवक्तव्यमिदं देवि अन्यथा नैव सिद्ध्यति ।**
**यस्यास्ति मनसि श्रद्धा तस्मै देयं वरानने ।।१३४।।**

अर्थ : हे देवी ! इसको (योग्य व्यक्ति को) बताना भी चाहिए, नहीं तो सिद्धि देनेवाला नहीं होता। हे सुन्दर मुखवाली ! जिसके मन में श्रद्धा है उसको देना चाहिए।

**अभक्ते वंचके धूर्ते पाखण्डे नास्तिके शठे ।**
**मनसापि न वक्तव्या गुरुगीता कदाचन ।।१३५।।**

अर्थ : अभक्त, वंचक, धूर्त, पाखण्डी, नास्तिक, शठ इनको गुरुगीता मन से भी नहीं कहनी चाहिए।

**सच्चिदानन्द रूपाय व्यापिने परमात्मने ।**
**नमः श्री गुरुनाथाय ह्यविद्या ग्रन्थिभेदने ।।१३६।।**

अर्थ : अविद्या ग्रंथि का भेदन करनेवाले सच्चिदानन्द रूप व्यापी श्री परमात्मा रूप गुरुनाथ को नमस्कार है।

**गुरवो बहवः सन्ति शिष्यवित्तापहारकाः ।**
**तमेकं दुर्लभं मन्ये शिष्यसंतापहारकम् ।।१३७।।**

अर्थ : शिष्य के धन को हरण करनेवाले बहुत से गुरु हैं। जो शिष्य के दुःख को हरनेवाले हैं उन एक गुरु को मैं दुर्लभ मानता हूं।

**संसार सागर समुत्तरणैकमन्त्रं**
**ब्रह्मादिदेव मुनि पूजित सिद्धमन्त्रम् ।**
**दारिद्रय दुःख भय शोक विनाशमन्त्रं**
**वन्दे महाभयहरं गुरुराजमन्त्रम् ।।१३८।।**

अर्थ : संसार समुद्र को पार करानेवाले मुख्य मन्त्र को, ब्रह्मादिक देव, मुनि और सिद्ध पूजित मन्त्र को, दारिद्र्य दुःख, भय और शोक के नाश करनेवाले मन्त्र को तथा महाभय को हरनेवाले गुरु राज मंत्र को मैं प्रणाम करता हूं।

**।। इति श्री गुरुगीता स्तोत्रं सम्पूर्णम् ।।**